ISBN : 978-81-945752-0-7

# मणिमञ्जीरम्

रचयिता
प्रो. अशोककुमार-कालिया

सम्पादकः
प्रो० बृजेशकुमार-शुक्लः

अखिल-भारतीय-संस्कृत-परिषद्
लखनऊ

# मणिमञ्जीरम्

अशोककुमार-कालिया




सम्पादकः
प्रो० बृजेशकुमार–शुक्लः

अखिल–भारतीय–संस्कृत–परिषद्
देववाणी–भवन, देववाणी–मार्ग
अलीगंज, लखनऊ–२२६०२४

प्रकाशिका
अखिलभारतीय–संस्कृत–परिषद्
'देववाणी–भवन', देववाणी मार्ग
अलीगंज, लखनऊ–२२६०२४


प्रथम संस्करण, २०१६

मूल्य
रू. १००.०० (सौ रूपये मात्र)

मुद्रक
पनार ऑफसेट
१७, अशोक मार्ग, लखनऊ
दूरभाष – ९५३२६६३१९७, ९६२१४२२२२२

# प्रकाशकीयम्

प्रो० अशोककुमारकालिया–महोदयो वाराणसेयसम्पूर्णानन्दसंस्कृत–विश्वविद्यालयस्य कुलपतिचर इदानीम् अखिलभारतीयसंस्कृतपरिषद उपाध्यक्षत्वेन विराजते। विशिष्टाद्वैतदर्शनस्याऽप्रतिमो विद्वान् प्रो० कालिया–महोदयः कविहृदयोऽपि वर्तते। संस्कृतकवितामञ्जीरं तत्रभवतो हृदि राजतेतरामिति 'मणिमञ्जीरम्' इति नामधेयेन कवितासङ्ग्रहेण सुष्ठु ज्ञातुं शक्यते। अत्र भावबोधः कलाबोधश्चोभावपि कवित्वशोभामाप्लावयतः। कवितासङ्ग्रहेऽस्मिन् सर्वत्र राष्ट्रभावनामञ्जीरम्, क्वचिच्च श्रृंगारच्छविमञ्जीरम् क्वचित् प्रकृतिरमणीयतामञ्जीरम्, क्वचिच्च राजनीतिमञ्जीरं प्रवहतितराम्। एतत्सर्वमुपादेयं सहृदयानाम्, राष्ट्रस्य विदुषाम्, संस्कृतज्ञानाञ्च। प्रथमं तावत् सङ्ग्रहोऽयम् 'अजस्रा' पत्रिकायां तत्सम्पादकेन प्रकाशितः। हृद्योऽयं कवितासङ्ग्रह इति मत्वा अखिल–भारतीय–संस्कृत–परिषदा निश्चितं यदस्य प्रकाशनं पृथक्त्वेन क्रियते चेत्तर्हि विद्वत्तल्लजा रसभावानुभूतिं कर्तुं सम्यग्रूपेण प्रभविष्यन्ति। अप्रकाशितकवितानां प्रकाशनमपि संस्कृतभाषायाः श्रीवृद्धिं करोतीति लक्ष्यमुद्दिश्याऽत्राऽखिलभारतीयसंस्कृतपरिषदैतत् प्रकाशनं विधीयते। आशास्ते यदेषा प्रकाशनप्रकल्पना फलीभूता सती विदुषां संस्कृताऽनुरागिणां सहृदयानाञ्च हृदयानि प्रीणयिष्यतीति कविप्रवरस्य च यशोमञ्जीरं स्फुरीभविष्यतीति शम्।

| | |
|---|---|
| गणेशचतुर्थी | जितेन्द्रकुमारत्रिपाठी |
| भाद्रपदस्य, २०७६ वि० | मन्त्री |
| लक्ष्मणपुरम् | अखिलभारतीयसंस्कृतपरिषद् |



# सम्पादकीयम्

सर्वज्ञानप्रभावतः प्रो० अशोककुमारकालियामहोदयस्य विशिष्टा–द्वैतदर्शनवैदुष्यं को न जानाति विपश्चित्, परन्तु तत्रभवतः सङ्कुचित–स्वभावत्वादात्मानं गोपायेदित्युपनिषद्वचनानुगामिनस्तस्य कविप्रातिभं न विस्फुरितं विद्वत्सु। यत्र क्वचिद् विकीर्णाः प्रकाशिता अप्रकाशिताः कविताः यदा मयाऽदर्शिषत तर्हि विचिन्तितं यदिदानीं खद्योतसदृशाः संस्कृते कवितां कुर्वाणाः स्वकीयं महाकवित्वेन स्वीकुर्वन्ति। यशःकामनामनिच्छतः प्रो० कालियामहोदयस्य कविता अतिरमणीयाः रसभावरञ्जका इदानीं कथं न प्राकाश्यमुपगताः। एष महाकविः प्रो० कालियामहोदयः कविषु सूर्य इव तेजस्वी कालिदासायते। तस्य कवितासु भावो नरीनर्त्ति, रसो वरीवर्त्ति, छन्दो छन्दति उच्छलन्ति चाऽलङ्कराः। एतत्सर्वं दर्शं दर्शं मम मनसि तत्रभवतः संस्कृत–कवितानां सङ्कलनं सम्पादनं च कर्तुं सङ्कल्पो दृढोऽभूत्। ततः प्रभृति खल्वहमितस्ततः प्रकाशितानामप्रकाशितानां तत्कवितानां सङ्कलनं कृतवान्। प्रथमं तावत् प्रकाशनमेतत्कवितानां परिषदः पत्रिकायामजस्रायामभवत्। पुनश्चाऽस्य महाकवेः कवितासङ्ग्रहः पृथक्त्वेन प्राकाश्यमुपयातु इति धिया 'मणिमञ्जीरम्' इति नाम्ना सङ्ग्रह एष उपकल्पितः।

कवितासङ्ग्रहेऽस्मिन् 'विस्फूर्तयः' 'तद्धि युद्धं विचिन्त्यम्' 'शीकराः' 'इतस्ततः' इत्यभिधानाश्चत्वारः शीर्षकाः सन्ति। एतेषु चतुर्षु शीर्षकेषु संस्कृतकवितानां विच्छित्तिरवलोक्या भवति।

प्रो० अशोककुमारकालिया–महोदयेन विविध–विषयेषु स्वकीयं कवित्वं विस्फूर्जितम्। स्वातन्त्र्यविषये, प्रजातन्त्रविषये युद्धविषये, वसन्तादिविषये, राष्ट्रविषये महापुरुषविषये तथा चाऽन्यान्यविषये संस्कृतकविता अत्र दरीदृश्यन्ते। सर्वे विषयाः कविप्रतिभास्पृष्टा नवीना इवाभान्ति,

यथोक्तमानन्दवर्धनेन–

दृष्टपूर्वा अपि ह्यर्थाः काव्ये रस परिग्रहात्।
सर्वे नवा इवाभान्ति मधुमास इव दुमाः।। (ध्वन्यालोके४/४)

प्रो० कालियामहोदयः कविहृदयो यान् यान् विषयान् प्रतिभया कवितारूपेणाऽवतारयति ते सर्वे विषया हृदयावर्जका सहृदयहृदयरञ्जका विपश्चित्प्रमोदकाश्च भवन्ति। यथा भारतस्य यशस्विनः प्रधानमन्त्रिणः श्रीनरेन्द्रमोदिमहोदयस्य विषये कवेः प्रतिभा खल्वेवं जागर्ति–

सञ्ज्ञा जन्म च कर्म मर्म सकलं येषां हि वैदशिकं
काङ्ग्रेसादिदलानि तानि दधते नो विस्मयः शत्रुताम्।
वामानां प्रतिकूलतैव सहजा, शक्ता इमेऽहं स्थिरः
शक्तिर्मे गुजरातराज्यजनताप्रेमाऽस्ति, सत्यं शपे।।

इत्यत्राऽलङ्काराणामभावाद् ध्वनित्वं कवितायां राजते। अतोऽत्र ध्वनिकाव्यत्वमुत्तमकाव्यत्वं वाऽङ्गीकर्तुं शक्यम्। एवमेव कविकृतं पत्रमपि कवित्वपत्ररचनायाः मार्मिकं पक्षं निगदति–

आशासेऽहं त्वमसि कुशली सूचयेथास् तथापि
स्वस्योदन्तं प्रतिदिनमहं त्वां यतश्चिन्तयामि।
शैथिल्येन स्खलितमिह यत् तत् समस्तं क्षमस्व
स्वामिन्नित्थं प्रणमति जनः सर्वथा तेऽनुरक्तः।।

अत्र मन्दाक्रान्तावृत्तस्य सुषमाऽपि न न्यूनतामुपयाति। पद्यमिदं कालिदासमहाकवेर्मेघदूतपद्यमिव स्मारयति।

एवमत्र सङ्ग्रहे संस्कृतकवितायाः पारम्परिकच्छन्दांसि विद्यन्तेऽथ च संस्कृतकवित्वस्य गीतिशैली अपि अत्र स्वामाभां प्रसारयति। यथा कवेर्गीतिरस्ति–

अविदितयौवनमदा प्रमुग्धा अकलुषरूपविलासविदग्धा
विग्रहिणीव चारुता स्निग्धा अपत्रपाऽरुणवदना।
अवगुण्ठनमपनयति सुवदना, उषा मुग्धकलवचना।।

अत्र महाकवेर्गीतिसौन्दर्यं कविचातुर्यं व्यनक्ति। अलङ्काररसान्विता खलु पङ्क्तिर्गीतमाधुरीं निर्झरति। कविता वनितेव राजते इति वचनं स्वयं कविर्वितनोति–

**कवितावनिताकलासु।**
**हृदयहरणपटुतरासु।**

**बहुविधासु तासु तासु**
**कमपि रसं मिश्रय, मिश्रय।**

अत्र प्रो० कालियामहोदयस्य काव्यशास्त्रीयं कामशास्त्रीयं च ज्ञानं स्फुरतितराम्। एत्ततु सहृदयजनसंवेद्यमेव। 'हे वर्षासुकुमारि' कविताऽस्य सङ्ग्रहस्याऽऽधुनिकमानवीकरणाऽलङ्कारं सुष्ठु प्रकटयति। प्रकृतेर्मानवीकरणं खलु पाश्चात्यकवीनां प्रियो विषय इति सर्वमुररीकृत्य कविप्रवरो विषयमाबध्नाति। महच्चित्रं कवितायां रसोप्यस्ति, भावोऽप्यस्ति, अलङ्कारा अपि सन्ति, छन्दांसि च काव्यशोभां वर्द्धयन्ति। क्वचिद्ध्वनित्वं क्वचिद् गुणीभूतव्यङ्ग्यत्वं क्वचिच्च चित्रत्वमपि दृश्यते कवितासङ्ग्रहेऽस्मिन्। सर्वत्र रीतिर्वैदर्भी क्वचिच्च पाञ्चाली रीतिर्दृश्यते। सर्वे काव्यगुणाः पुष्यन्ति च काव्यमिदं मुक्तकमिति।

इत्थं समेषां काव्यशास्त्रीयगुणानामाकरभूतत्वेन कवितासङ्ग्रहोऽयं डॉ० अशोककुमारकालियामहोदयस्य महाकवेः प्रतिभां व्यनक्ति। एतत्सर्वं दर्श दर्शं मम मनोऽस्य सम्पादनं कर्तुं समीहते। सम्पादनं खल्वेतद् यद्विहितं तत्तु सहृदयानां समक्षं यदा यास्यति तदैवाऽस्य सार्थकत्वं प्रमाणीभवितुमर्हतीति काव्यचारुत्वाऽचारुत्वविषये सहृदया एव प्रमाणमिति। आशासे यत् सम्पादितमिदं कवितासङ्ग्रहमुक्तकं 'मणिमञ्जीरम्' इति नाम समेषां कवि–सहृदयानां विदुषां च कृते हृदयाह्लादकं बोभूयिष्यत इति ध्वनिकारवाक्येन कविं प्रति नमोवाकं विधाय विरमत्ययं जनः–

**'नहि काव्यार्थविरामोऽस्ति यदि स्यात्प्रतिभा गुणः।'**

**(ध्वन्यालाके)**

**(प्रो०) बृजेशकुमारशुक्लः**



***

# अनुक्रमः

***

## प्रणतयः

सन्देहान्वितचेतसा प्रियतमालङ्कानिरोधक्षणाद्
वृत्तान्तं परिकल्पितं स्वयमहो व्याजीकृतो दुर्जनः।
मर्यादापुरुषोत्तमः सहृदयः सत्यप्रतिज्ञश्च यः।
प्रोक्तः सज्जनसंसदि प्रणतयो रामाय तस्मै सदा।।१।।

दोषारोपान् प्रियतमवराविष्कृतान् तान् कृतान्तान्
अन्यायानामतिशयवतो मर्षयन्तीव मौनात्।
याऽसौ मूर्तिर्नयनसलिलस्नानसत्त्वप्रतिष्ठा
सीतासञ्ज्ञा मुहुरपि मुहुस्तां प्रणौमि प्रणौमि।।२।।

अमूर्तं यत्तेजोऽविषयमपि सारस्वतमहो
तदेतद् ध्यातुं कः प्रभवति समर्थोऽपि पुरुषः।
ततो मूर्तं रूपं मनसि परिकल्प्याऽऽश्रयतया
विशुद्धं विज्ञानं किमपि समुपासेऽहमधुना।।३।।

सिंहासन इव समुदं हृदयखट्वायां प्रभग्नायामपि
निषीदन्न विषीदति प्रसीदतितरां मयि रङ्गसद्गुरुः।।४।।

मैसूरुराजपरिपूजितपादपद्मां
श्रीब्रह्मतन्त्रपरकालयतीन्द्रपंक्तिम्।
संस्कारपञ्चकपुरस्सरमाप्तविद्यः
श्रीवैष्णवत्वविभवः प्रणमामि मूर्ध्ना।।५।।

श्रीलक्ष्मीहयग्रीव–दिव्यपादुकारत्नाऽवतंसम्।।
श्रीमदभिनवरङ्गेशपरकालगुरुं समुपाश्रये।।६।।

***

## जय हे

जय हे, जय हे, जय हे, जय हे,
भारत – भाग्यविधातः! जय हे,

बहुकालिककारानिर्मुक्तं
नय सुपथा दुःशासनमुक्तं
राष्ट्रं सौशासन–विश्रब्धं
जय गणतन्त्रविनायक! जय हे
जनगणमनोऽधिवासिन्!जय हे
भारतभाग्य–विधातः! जय हे
जय हे, जय हे, जय हे, जय हे।।१।।

जनमनसामस्याशाबन्धः
घनतमसामपि दीपस्तम्भः
अभिलषितार्थसमृद्धिशेवधे!
जय जनगणपरिपालक! जय हे
जनगणमनोऽधिवासिन्! जय हे
भारतभाग्यविधातः! जय हे
जय हे, जय हे, जय हे, जय हे।।२।।

अन्तर्बहिःसमन्ताद् रक्षा
यथाप्रवृत्तिः शिक्षा दीक्षा
वृत्तिव्यवस्था भरणसदृक्षा
जनगणमनोरथाऽश्वसारथे!
जनगणमनोऽधिवासिन्! जय हे
भारत–भाग्यविधातः! जय हे
जय हे, जय हे, जय हे, जय हे।।३।।

***

# स्वातन्त्र्यम्

स्वातन्त्र्यसङ्ग्रामयागीयवह्नौ
'स्वाराज्यमाजन्मसिद्धोऽधिकारः
यैरेवमुद्घुष्य दत्ताऽऽहुतिस्ते
लालश्च बालश्च पालश्च पूज्याः।।१।।

गान्धी सुभाषो युवा नेहरुश्च
अम्बेडकरः संविधानप्रणेता।
प्राज्ञः पटेलश्च शास्त्रीन्दिरा च
लोकप्रियो वाजपेयी प्रपूज्याः।।२।।

काऽप्यहिंसाऽद्भुता कोऽपि सत्याग्रहः
आयुधं कीदृशं गान्धिना निर्मितम्।
येन हिंसां विना रक्तपातं विना
निर्जिताश्शत्रवश्चाऽर्जितं कांक्षितम्।।३।।

स्वातन्त्र्यं यत्प्रयतनशतैर्नो दुराराध्यमासीत्
यत्सम्प्राप्त्यै कति कति जनाः स्वाहुतिं दत्तवन्तः
दुःखप्राप्यं सुखमधिगतं तद् विना रक्तपातं
नो लज्जन्ते कथमपि कुतो न्वालपन्तो भवन्तः।।४।।

स्मारं स्मारं विषमविषमं त्रासदं पारतन्त्र्यं
कुम्भीपाकं निरयमथवा तं सहस्राब्दभोग्यम्।
स्वातन्त्र्यस्य श्रुतिपथगतां चाऽद्य विक्रान्तिगाथाम्
आश्वस्तेयं स्वपिति मुदिता मातृभूमिस्त्वस्मदीया।।५।।

स्वातन्त्र्याप्तिर् जनयति परां स्वात्ममानोन्नतिञ्च
स्वातन्त्र्यप्त्या विशति हृदये सुस्थिरा काऽपि शान्तिः।
शान्तिश्चैषा चिरमधिगता, सा नितान्तं महार्हाऽ—
तस्स्वातन्त्र्यं प्रयतनशतैर् हन्त रक्ष्यं सुरक्ष्यम्।।६।।

स्वर्गापवर्गादपि या गरीयसी
स्वजन्मभूमिर्जननी च कीर्तिता।
साऽवाप्य पुत्रानगृहीतभावान्
स्तन्यं स्वकं भाग्यमथाऽप्यनिन्दत्।।७।।

कलुषीकृतनिर्मलगाङ्गपयो।
मलिनीकृत—भारतताविभवः।
अनुचिन्त्य सडिण्डिमनादमिमे
टुकडेदल'मातनुते नु भयम्।।८।।

विकलीकृत—संस्कृतिगात्रमिदं
शकलीकृतभारतराष्ट्रमिदम्।
अनुभाव्य परां मुदमादधते
किमु मत्तगजा उत हिंस्रमृगाः।।६।।

सहस्राब्ददासत्वदुःखाऽब्धिमग्ना
भृशं धर्षिता कर्शिता मातृभूमिः।
बलादङ्गभङ्गं वहन्ती त्वगत्या
प्रपीडामसह्यां कथञ्चिच्च सेहे।।१०।।

युगनभखयमाङ्कैर्योजिते वैक्रमाब्दे
चतुरधिकदशाहे श्रावणेऽशुद्धकृष्णे
निगडितनिखिलाशं भारतं राष्ट्रमेतन्
निबिडतमतमोघ्नीं भास्कराभां ददर्श।।११।।

भारतमन्ततो मुक्तं वैदेशिकमुष्टिबन्धनात्।
आन्दोलनैककं लक्ष्यं लब्धं स्वातन्त्र्यमीप्सितम्।।१२।।

जटायाश्चाऽवमुक्तेव गङ्गा ह्यापतिता जवात् ।
कांग्रेसस्कन्धयोर्गुर्वी दुर्धरा शासनधुरा ।।१३।।

आदौ शासकशास्ययोरभिमतं सौहार्दसङ्घट्टनं
स्वाराज्यं निजशासनं ननु ततः स्वातन्त्र्यमिष्टं परम् ।
स्वातन्त्र्ये सति राष्ट्रमुन्नतिशिरो नेतुं प्रवृत्तिस्ततः
काङ्ग्रेसाऽऽख्यदलस्य सङ्ग्रहतया यात्रेयमुच्चावची ।।१४।।

***

# नव–धर्मशास्त्रम्

न संविधानं न च धर्मशास्त्रं
कथं प्रवर्तेत हि राजकार्यम्।
विनैव यानञ्च विनैव नौकां
महार्णवो लङ्घयितुं न शक्यः।।१।।

इत्थं तदानीन्तनबुद्धिमदिभर्
मनीषिभी राष्ट्रहितैषिभिश्च।
विचार्य सूक्ष्मं सुपरीक्ष्य सृष्टं
नवं विधानं नवधर्मशास्त्रम्।।२।।

प्रधानमन्त्री न्वुत मन्त्रिणोऽन्ये
निमित्तमात्राणि भवन्ति सर्वे।
समग्रराष्ट्रं खलु लोकतन्त्रे
नेपथ्यतो लोकमनः प्रशास्ति।।३।।

***

# प्रजातन्त्रम्

विभिन्नराष्ट्राणि विभिन्नकाले
तदीयवृत्तानि च वीक्ष्य सम्यक्।
वदन्ति विज्ञास्तु सुदूरदर्शिनो।।
विधात्रयं शासनपद्धतीनाम्।।१।।

बहुविधमुक्तं शासनतन्त्रं
प्रथितं किन्तु भूयशस्त्रिविधम्।
राजतन्त्रमधिनायकतन्त्रं
प्रजातन्त्रमिति चारुचरित्रम्।।२।।

क्वचित्प्रजायामधिनायके क्वचित्
क्वचिच्च राष्ट्रं नृपतावधीनम्।
प्रवर्तते साधुतयाऽन्यथा वा
नियत्यधीनं जनताहिताऽहितम्।।३।।

प्रजायाः शासनं ह्येतत् प्रजाधीनं प्रजाहितम्।।
प्रजातन्त्रमतः श्रेष्ठं सर्वतन्त्रेषु कथ्यते।।४।।

कामं प्रजातन्त्रमिदं वरिष्ठं
यद् दृश्यते सम्प्रति वर्तमानम्।
हेतुस्तथात्वे न दोषशून्यं
दोषाऽल्पता तस्य विशेषतैव।।५।।

प्रजा विजानाति निजं हितं यतस्
त्वतः स्वतन्त्राऽस्ति सुमार्गमार्गणे।
प्रजैव शास्या स्वयमेव शासिका
ततो वरं वा भवितुं किमर्हति।।६।।

विविच्य सम्यक् च विचित्य हृद्गतं
यत्र प्रजा संवृणुते निजं हितम्।
यदृच्छया स्वेष्टफलानि चाऽश्नुते
ततो वरं वा भवितुं किमर्हति।।७।।

क्वचित्सम्प्रदायः क्वचिद् धर्मवादः
क्वचिज्जातिवादः क्वचिद् गालिवादः।
इतीत्थंविधैः साम्प्रतं हन्त जातं
विशेषैर्विरूपं न्विदं लोकतन्त्रम्।।८।।

प्रजातन्त्रगीतानि मन्त्रांश्च विज्ञाः
स्तुवन्ति प्रशंसन्ति गायन्ति नित्यम्।
परन्तु प्रजातन्त्रसाफल्यसिद्धिः
स्वधर्मक्षमप्रातिनिध्याऽऽश्रिता स्यात्।।९।।

***

# निर्वाचनम्

## कः पन्थाः

सर्वत्र नो भारतवर्षदेशे
मन्ये गुणाढ्यं खलु लोकतन्त्रम्।
ह्येते गुणाः सप्रसवास्तथापि
वशंश्च वित्तञ्च बलिष्ठता च।।१।।

एतन्निर्वाचनं नाम धर्मक्षेत्रं प्रकल्पितम्।
युद्धक्षेत्रमिदं भीष्मं कुरुक्षेत्रमिवाऽपरम्।।२।।

गर्वो दर्पोऽभिमानश्च ह्यहङ्कारोऽहमन्यता।
विश्वसनमविश्वस्ते स्थानेऽविश्वसनं तथा।।३।।

एतान्यत्युन्नतानाञ्च श्लाघाचाटूक्तिरागिणाम्।
पराभवप्रवाहस्य लक्षणानि न संशयः।।४।।

कदाचिद्रोदयत्येतत् कदाचिद् हर्षयत्यपि।
कदाचित्पीडयत्येतत् कदाचित् प्रीणयत्यपि।।५।।

निर्वाचने ध्रुवां सिद्धिं न मन्यन्ते विपश्चितः।
समीक्ष्यातो युयुत्सेत समौ कृत्वा जयाऽजयौ।।६।।

अर्हणा गर्हणा नन्दनं निन्दनं
नैष्ठिकाऽऽराधना नैत्यिकाऽऽलोचना।
लोकतन्त्रीयनिर्वाचनानां प्रथा
किन्तु पारुष्यमत्राऽप्रशस्तं मतम्।।७।।

लोकतन्त्रीयनिर्वाचनाख्ये रणे
नाऽपि कश्चिज्जितो नाऽपि कश्चिज्जयी।
वस्तुतोऽन्वर्थतः केवलं केवला
सर्वशक्ता प्रजा सर्वदा जित्वरी।।८।।

राजलक्ष्म्या चितास्ते विभूत्याऽर्चिताः
किन्तु माद्यन्ति सम्माननीया इमे।
हन्त जैत्रो रथः कस्य रिक्थं मतं
लोकतन्त्रे प्रजा सर्वदा जित्वरी।।६।।

***

# कश्च मोदते

अनेकजन्मार्जितपुण्ययोगतः
स्वराष्ट्रभाग्यादुत दैवयोगतः।
प्रधानमन्त्रित्वमवाप कोऽप्ययं
नरेन्द्रदामोदरदास–सेवकः।।१।।

नमो नमो राष्ट्रहितैकचक्षुषे
नमो नमो नूतनवर्त्मवेधसे
नमो नमोऽपूर्वविचारस्रोतसे
नरेन्द्रदामोदरदासतेजसे।।२।।

विविच्य सञ्चित्य पदानि यत्नतः
सुचिन्त्य सङ्गुफ्य च तानि माल्यवत्।
विजित्य चेतांसि विभाति संस्कृता
नरेन्द्रदामोदरदास – वैखरी ।।३।।

विपक्षिणो येन कृता विपक्षिणः
स्वपक्षिणश्चापि कृताः सपक्षिणः।
नमोऽस्तु तस्मै ह्यमिताय तेजसे
नरेन्द्रदामोदरदासमोदिने।।४।।

अहो समुत्पाट्य च राजवंशं
सुखेन सिंहासनमारुरोह।
नितान्त–साधारण–भूमिपुत्रो
नरेन्द्रमोदी स च चन्द्रगुप्तः।।५।।

अहो नु सौभाग्यमतः परं किं
यदद्य कोऽप्येष नरेन्द्रमोदी।
सीमामतिक्रम्य विशेषणानां
नाम्नां सहस्रेण समर्चितोऽभूत्।।६।।

ट्रेटरो हिट्लरो हन्त डिक्टेटरो
बूचरो राक्षसो मृत्युसौदागरः।
बेइमानश्च मूर्खश्च गुण्डा गधा
किञ्च शैतान् नीचस्तथा रावणः।।७।।

दिग्दिगन्तागतैश्चारणैर्वन्दिभिः
किञ्च वैतालिकैः स्वैरमाराधितः।
सेवितः सस्पृहं संस्तुतः सस्वरं
दुर्लभा नूनमेवंविधा सत्क्रिया।।८।।

यादृशी चिन्तना तादृशी कल्पना
यादृशी कल्पना तादृशी योजना।
यादृशी योजना तादृशी वर्तना
मोदिनो विक्रमस्याऽयमेव क्रमः।।९।।

यादृशी मन्तृता तादृशी वक्तृता
यादृशी वक्तृता तादृशी कर्तृता।
यादृशी कर्तृता तादृशी कृत्यता
मोदिनो विक्रमस्याऽयमेव क्रमः।।१०।।

नमो नमो राष्ट्रसमृद्धिसम्पदे
नमो नमो राष्ट्रियताऽभिमानिने।
नमो नमो राष्ट्रपुरोहितात्मने
नरेन्द्रदामोदरदासमोदिने।।११।।

नमो नमो लोकहितैकचक्षुषे
नमोऽस्तु नैराश्यतमोऽपनोदिने।
नमो नमो लोकमनःप्रमोदिने
नरेन्द्रदामोदरदासमोदिने।।१२।।

सञ्ज्ञा जन्म च कर्म मर्म सकलं येषां हि वैदेशिकं
काङ्ग्रेसादिदलानि तानि दधते, नो विस्मयः, शत्रुताम्।
वामानां प्रतिकूलतैव सहजा, शक्ता इमेऽहं स्थिरः
शक्तिर्मे गुजरातराज्यजनताप्रेमाऽस्ति, सत्यं शपे।।१३।।

लक्ष्मीः कौस्तुभपारिजातकसुधेत्यादीनि हृद्यानि वै
रत्नानीह चतुर्दश प्रतिगृहं प्रासादयन्तु श्रिया।
अस्माकं खलु राष्ट्रमेव विभवः तेनैव धन्या वयम्
एका भारतराष्ट्रभक्तिभरिता प्रज्ञाऽस्मदीयं धनम्।।१४।।

***

## जय हे !

जय हे, जय हे, जय हे, जय हे,
भारत – भाग्यविधातः! जय हे,

प्रजातन्त्रसर्वस्व! महत्तम!
संवैधानिकधर्माऽन्तस्तम!
जनगणमनोऽन्तरात्मपर्यायक!
जनगणमनोऽतिमानस! जय हे
जनगणमनोऽधिनायक! जय हे
भारतभाग्यविधातः! जय हे

जय हे जय हे, जय हे, जय हे
भारतभाग्यविधातः ! जय हे ।

***

## तद्धि युद्धं विचिन्त्यम्

(१)

पत्रं लब्ध्वा स निजगृहिणीमुग्धहस्ताङ्कितं तत्
तिष्ठन् दूरे हिमगिरितटे सैन्यसंयोजनायाम्।
वीरः कश्चिद् रिपुदलगतौ सर्वदा दत्तदृष्टिर्
भार्यामार्यां हृदयगगने पत्रशब्दैर्ददर्श।।

### अथ पत्रस्य प्रथमं पुटम्

(२)

वार्तैषाऽद्य श्रुतिपथगता तप्ततैलादिवद् यत्
सीमां भित्वा प्रकृतिसुभगे छम्बसञ्ज्ञे प्रदेशे।
वध्यैस्तैस्तैर्भरतविदिता जन्मभूमिः प्रविष्टा
सन्नद्धस्त्वं स्मरणसमरे तावता प्राणनाथ!।।

(३)

चिन्ताग्रासात् सुरभिविपिनं सज्जितं त्वत्कराभ्याम्
आश्रित्याऽऽरान्निजनयनयोश्चाकुलं ध्वान्तराशिम्।
दूरे कृत्वा नयनसलिलाच्छुभ्रमूर्तिर्मयैवं
दृष्टोऽसि त्वं कुशकुसुमयोः शत्रुजिन् मानुषश्च।।

(४)

दृष्ट्वा किञ्चन्मलिनवदनां माममात्वं व्रजन्तीम्
अत्रैवोक्तं कुसुमलतिकां स्वं च रक्षेः प्रिये ! मे।
व्यर्थं स्याद् यन्नयनसलिलं तद्धि वित्तं मदीयं।
दाहास्त्रं यत् त्वमथ नयसीत्येवमुक्तस्तदाऽऽसीः।

(५)

सेनायास्त्वं पतिरसि सखे! मेऽपि, कृत्यं महत्ते
नाऽहं चिन्त्या विपदि भवता शाश्वती संहिता नौ।
रक्षाऽऽत्मानं कथमपि यतो मातृभूम्याश्रयस्त्वम्
माताऽव्याजं जनयति सुतं प्रेयसी स्वार्थिनी स्यात्।।

(६)

चिन्तायां ते सततनिरता त्वन्मयी त्वद्गताऽहं
भूयः क्षोभं मनसि गमिता त्वद्विपत्तिं प्रपठ्य।
स्वार्थो मे स्यान्निरतिशयितं यन्ममत्वं मम त्वं
हेतोरस्माद् व्यथयति भृशं तद्धि युद्धं विचिन्त्यम्।।

(७)

एका भूमिर्मनुजजननी निश्छला सर्ववन्द्या
खण्डं खण्डं खननपटुना स्वाऽऽधिपत्यस्य लब्ध्यै।
केनाऽकारि? प्रथिततनुजः कश्चिदासीदवश्यं
पाकिस्तानी क्वचिदवगता भारती कुत्रचित्सा।।

(८)

भूयो भूयस्त्वमुपदिशसे मानुषत्वं हि रक्ष्यं
शस्त्रं नीत्वा कथमिव भवेन् मानुषत्वस्य रक्षा।
धर्मो धर्मः प्रलपति जनः सोऽप्यनाघ्रातधर्मः
क्वाऽसौ धर्मो धरति धरणीं क्वाऽस्ति खड्गादिसज्जः।।

(९)

नेदं नूत्नं यदिह सुकृतं मन्दिराणां विनाशाच्
चर्चस्थानं बमविषमितं ह्येष धर्मस्तदीयः।
नाशः कुत्र प्रिय! सुलिखितो मस्जिदानां कुराने
धिग्धिग्धर्मं धरति विविधं यः स्वरूपं यदृच्छम्।।

(१०)

मानुष्यं किम्? क इति मनुजो? जीवनं नाम किम्? को
धर्मश्चोक्तोऽविरतमिह यान् स्तौमि निन्दामि चाऽहम्।
बुद्ध्यर्थं मे रहसि निहितं वर्तते यद्धि सत्यं
गोप्यानां तां दिशि दिशि गुहां कल्पयेऽहं हि दुर्गाम्।।

(११)

ईशो मा भूत्तदधिगमने कल्पनाया गुरुत्वान्
नो वा चिन्त्यः कथमपि यतस्तस्य सत्त्वेऽपि किं स्यात्।
एवं चेद् हा मनुजजनुषो ज्योतिरालम्बनं यत्
तस्माद् गाढे तमसि नयते बुद्धिवादप्रतापः।।

(१२)

भावाऽभावौ परमपुरुषाऽऽविष्कृतौ कल्पयन्तां
किञ्चाऽन्येषामिह न हि मया चिन्तनं चिन्तनीयम्।
संसारेऽस्मिन् कथमपि सखे! नाऽवलोक्याऽर्थवत्तां
तस्मिन्नेव प्रतनुकिरणे साश्रया चित्तवृत्तिः।।

(१३)

अर्हा बुद्धिर्नियतविषये माननीया स्वभूमौ
बुद्धेर्वादं कमपि सततं नित्यनूत्नं विवक्षुम्।
वन्दे वन्दे पुनरपि पुनः मानवो यद्वशोऽयं
प्राप्तं हित्वा गगनकुसुमं प्राप्तुमुद्बाहुरस्ति।।

(१४)

ऊढिर्नूनं सुखयति भृशं भोग्यलब्धिश्च कञ्चित्
काव्यं कश्चिद् रचयति मुदाऽन्यश्च सङ्गीतमग्नः।
ध्यानं कश्चिद् हृदि वितनुते ब्रह्मरूपाऽऽत्मकं यन्
मन्ये दृष्ट्वा जनुषि गुरुतां ते पलायन्त आरात्।।

(१५)

दुःखोदर्कं  जगति सकलं यच्च दुःखाऽनुभूत्या
नाऽऽक्रान्तं तत् कथमिव भवेज् जीवनं वा जगद् वा।
दृष्टिः स्याद् वा प्रकृतविषये पक्षपाताऽऽकुला मे
मन्ये  यद्  यत् सुखमिव यतो भ्रान्तिमूलं हि तत्तत्।।

(१६)

नो वा जाने किमपि जनुषः? किञ्च? सत्यं शपेऽहं
हेतोरस्मात्  कथमपि वरं नाऽस्य वैयर्थ्यशङ्का।
आध्यात्मं  वा  मनसिजकृतं मौक्तिकं भौक्तिकं वा
यद् वा तद् वा जनुषि निखिलं प्राप्यमानन्दरत्नम्।।

(१७)

कश्चिद्  ब्रूते पशुखगकुलैः स्निग्धसाजात्यभावं
कश्चिद् ब्रूते प्रकृतिकृतिभिः शुभ्रतादात्म्यभावम्।
यावन्नाऽऽस्ते  निखिलनृकुले नः सजातीयभावो
वागारम्भो भवति निखिलं तद्धि किं वा प्रलापः।।

(१८)

नीत्यै युद्धं भवति नियतं सा हि रक्ष्या सुरक्ष्या
नो सा नीतिः विपरिणमते या प्रतीकारबुद्ध्या।
शान्तिः शान्तिः प्रथममवदद् यः स्वदूतैः कपोतैर्
युद्धं  युद्धं  क्वणति सततं  तीक्ष्णशस्त्रैः कुघातैः।।

(१९)

यस्यां नित्यं विपरिणमनं नाऽस्ति किञ्चिच्च तस्या
नीतेर्मूलं  समरमिति  चेन्  नो ह्यनीतिस्तदा सा।
चीनीया  सा  परिलसति  चेद्,  राष्ट्रगीतं प्रमाणं,
संहारं  याऽऽह्वयति  परमं मानुषाणां न नीतिः।।

(२०)

बाल्ये काले श्रुतमिति मया केनचिन् मन्त्रशक्त्या
व्याघ्रः सृष्टोऽभवदथ च सा तत्क्षणं तस्य वृत्तिः।
शक्तेर्मोहादहमहमिकामोहितोऽण्वस्त्रसृष्ट्या
मन्ये शाखां स निजशरणां मन्दबुद्धिश्छिनत्ति।।

(२१)

नो युद्धाऽर्थं कथमपि मता युद्धसज्जाऽस्मदीया
युद्धत्रासो जनयति शमम्, भो! भये कुत्र शान्तिः।
स्वोक्तेर्घातं सततमविदन् माद्यति ज्ञानमूढः
स्वार्थं नीत्वा प्रचलति यतस्तर्करीतिस्तदीया।।

(२२)

त्यक्त्वा भार्यां कथमपि तथा मातृपुत्रांश्च हित्वा
वृत्त्यै सैन्या निजकृतिपरा नो चिकीर्षन्ति युद्धम्।
चिन्त्यं नित्यं प्रिय! सुमनसा यद्धि कालं कियन्तं
योत्स्यन्ते ते घृणितसमरे व्याजतो राष्ट्रभक्तेः।।

(२३)

सद्हेतुर्यः कथमपि भवेन्नाऽस्ति युद्धे कुबुद्धेः
स्वार्थप्राप्त्यै सकलयतनं तेषु युद्धं विरोधे।
हन्त स्वार्थो नियमयति तान् धर्मकामाऽर्थमोक्षान्
स्वार्थो मूलं फलमपि तथा सोऽस्ति सर्वत्र हेतुः।

इति प्रथमं पुटम्

## अथ द्वितीयं पुटम्

(२४)

सैषा चिन्ता व्यथयति भृशं वर्द्धिता या मया सा
याता शान्तिः सह च समरे वाटिकायास्त्वया किम्?
क्षुब्धं चित्तं भवति नितरां किञ्च यात्यव्यवस्थां
किं वा कुर्यामिति हतमतिः स्वप्रकोष्ठं गताऽहम्।।

(२५)

शूराणां तु प्रतिभटघटाभेदनाद् भावितानां
भित्तौ दृष्ट्वा प्रसृतयशसामत्र चित्राणि तेषाम्।
भावो नूनं विशति हृदये मामकीने विचित्रो
नृत्यत्यग्रे मम नयनयोश्चाऽथ यौद्धो विपाकः ।।

(२६)

आपत्तौ चेत् पतति नितरां जीवनं ते धनं मे
तस्मात्क्रीत्वा परमकृपया गौरवं मे ददीथाः।
कादाचित्कं ननु जनुरिदं वः प्रसङ्गेन वच्मि
प्रायो दारा सुपतिधनिनस्तद्गुरुत्वात् कृतार्थाः।।

(२७)

'अब्दाली' 'नृपनादिरो' 'गज़नवी' शिष्या अनल्पास्तथा
नीयन्ते स्मृतिवीथिकासु सुचिरं धर्मान्धतालिङ्गिताः।
सन्ध्यायामवलोक्यते तदुदिता ह्यद्यापि रक्तच्छटा
नैशीथेऽपि च सूचिभेद्यतमसि प्रध्वंससंस्तब्धता।।

(२८)

व्याप्ते युद्धे महति महतामद्वितीये द्वितीये
मृत्योर्नृत्यं प्रतिभयमभूद् यच्च कालस्य कृत्यम्।
शिष्टध्वंसामनितरकृतां वीक्ष्य सम्पत्तिकाष्ठां
पोलैण्डीयां तु करुणदशां याति चित्तं मदीयम्।।

(२९)

श्रान्तः क्लान्तः कठिनकृतिभिश्शान्तिकामी स्वकार्या–
दागत्याऽसौ विलपति भृशं वीक्ष्य नष्टं निवासम्।
सा मे भार्या गगनसमराद् हा हता वा मृता वा
विद्यास्थानं प्रति गतवती बालिका मामिका क्व?।।

(३०)

पृच्छत्यन्यः सजलनयनो रक्षिणं ज्ञानशून्यो
हा मेऽहन्ता हरिणनयना स्वर्णवर्णा सुवर्णा।
कार्याऽऽगारं मयि गतिवति क्वाऽपि लुप्ता विलुप्ता
भो भो रक्षिन्! नयनपदवीमागता किं त्वदीयाम्।।

(३१)

प्रष्टव्यास्ते कलुषितधियो मत्तपाश्चात्यदेशाः
शत्रुत्वं चेन् मनसि नितरां कैश्चिदासीत्, किमर्थम्?
उत्पत्तेः प्राग् जनिरपहृता भाविसत्सन्ततीनां
नागासाकी ह्यनुभवति कं स्वाऽपराधं तपस्वी ।।

(३२)

ऊढ्वा सर्वो जगति लभते हार्दमानन्दपुञ्जं
वाञ्छन्तौ च प्रणयकृपणौ नव्यदाम्पत्यसौख्यम्।
चिन्ताऽऽक्रान्त्या प्रतिपदमहो बाधितौ दम्पती तौ
नागासाकी ह्यनुभवति कं स्वापराधं तपस्वी ।।

(३३)

कृत्वा क्रोडे समरनिहतान् गाढमालिङ्ग्य बालान्
नित्यं स्वामिन्! मलिनवदनान् तांश्चुचुम्बीमि यावत्।
निद्रा द्राति प्रिय! मम कथा चाऽस्ति दैनन्दिनीयं
नागासाकी ह्यनुभवति कं स्वाऽपराधं तपस्वी।।

(३४)

युद्धस्फोटो हृदयनिहितो जर्मनीराष्ट्रदेहे
तद्विस्फोटात् तदिह हृदयं खण्डशोऽभूद् विभक्तम्।
तस्याऽङ्गारैः सकलपृथिवी कम्पिता क्वाऽपि दग्धा
किं वा ब्रूमो निरतिशयितं पश्य युद्धं समर्थम्।।

(३५)

एका जाती रुधिरमपि तद् वर्णभाषे तथैके
सत्यप्यैक्ये सकलविधिना त्वेवमेते विभिन्नाः।
मध्ये भित्तिस्सुदृढखचिता तत्र पूर्वाप्रतीच्योस्
तेषां मन्ये समरफलितः शोभनोऽयं समाधिः।।

(३६)

संसारेऽस्मिन् महति कतमो निर्दयस्तादृशस्स्यात्
क्रौर्यं तद् यः कथमपि सहेद् यद् वियन्नामयुद्धम्।
औदीच्यानां हृदि हृदि गता या निजोत्सर्गबुद्धिश्
चारित्र्यं सा जगति सुचिरं प्रेरयित्री भवित्री।।

(३७)

जन्माऽऽदौ च प्रकृतिविकृतौ यो हि युद्धाऽऽदिहेतुस्
तन्मध्येऽसौ नियतिपतितो हन्त इज़्राइलादिः।
क्रुद्धं व्याघ्रं मशक इव यः क्षोभयन् वीतभीतिः
कं वाऽयं नो समुदिशते शुद्धसङ्कल्पशक्तिम्।।

(३८)

एषा पृथ्वी बहुकलुषिता द्वेषमात्सर्यपूर्णा
तस्मात्स्वर्गं विगतकलुषं प्रत्यहं कल्पयेऽहम्।
सापेक्षत्वं प्रकृतिरिति हि प्रायशः सार्वभौमी
नैव त्याज्या किमिह पृथिवी किं ह्यलभ्यो द्युलोकः।।

(३९)

यद्यप्यद्य प्रिय ! विकसितो मानवः सभ्यतायां
युद्धक्षेत्रे प्रविशति यदा विस्मरत्यात्मरूपम्।
कार्याऽकार्ये चरति सततं सर्वदाऽबुद्धिपूर्वं
स्वस्याऽऽद्यत्वं विगतधिषणो वानरत्वं दधाति।।

(४०)

मौनं मौनं प्रसरति भृशं दिक्षु युद्धे निरुद्धे
मुग्धाऽऽकाशो रुरुदिषति किं जाड्यमालम्ब्य गाढम्।
मृद्वी पृथ्वी मलिनवदना शोकलीना विलीना
पृथ्व्याकाशौ हृदि कथयतो, हन्त, नष्टोपलब्धिः।।

(४१)

शान्ताऽवस्थां कथमपि सखे! नैव शक्नोमि मातुं
नैवैकान्तं समरमभवन् नैव चैकान्तशान्तिः।
दृष्ट्वा बुद्धिर्भवति सुदृढा हीतिहासस्य पृष्ठं
संसारस्य प्रकृतिरिति सा शाश्वती शान्तियुद्धे।।

(४२)

संसारित्वान् निखिलमनुजश् शान्तियुद्धस्वभावस्
तस्माद् युद्धात् कथमपि न मे त्वां निरोद्धुं प्रयत्नः।
एतद् युद्धं शिरसि पतितं धर्म एवेति सत्यं
निस्सन्दिग्धं मरणसदृशं कातरत्वं हि मन्ये।।

(४३)

अस्तव्यस्तं स्खलितमथवा क्वाऽप्यसम्बद्धमेव
ह्यायातं यन् मम हृदि यथा तत् तथैवाऽङ्कितं भोः।
जानास्येव त्वमतिशिथिलं मामकीनं स्वभावं
तात्पर्याऽर्थं कथमपि सखे! ज्ञायतां मे मनःस्थम्।।

(४४)

आशासेऽहं त्वमसि कुशली, सूचयेथास् तथापि
स्वस्योदन्तं, प्रतिदिनमहं त्वां यतश् चिन्तयामि।
शैथिल्येन स्खलितमिह यत् तत् समस्तं क्षमस्व
स्वामिन्नित्थं प्रणमति जनः सर्वदा तेऽनुरक्तः।।

इति पत्रस्य द्वितीयं पुटम्

समाप्तञ्च पत्रम्

(४५)

पत्रं दृष्ट्वा निहितमनसा विस्मयाऽऽक्रान्तचित्तः
पर्यङ्कस्थामलसवदनां भ्रूविलासप्रवीणाम्।
लब्ध्वा चाऽसौ स्मरणपदवीं सुस्थिरं चित्रवत्तां
कैश्चिच्छब्दैर्घुणलिपिनयाद्रञ्जयामास पत्रम्।।

(४६)

साह्याऽयोग्ये विसविषलते ते हि भार्याभुशुण्ड्यौ
दृष्ट्वाऽपि त्वं सहनियमनं मे न मोहं गताऽसि।
स्मारं स्मारं मृदुलवदनं बाहुमध्ये लसन्तं
रूपाद् बुद्धिर् मम मलिनतां याति पत्रार्थलक्ष्यात्।।

(४७)

यक्षीभूतो नयनसलिलं मुञ्चमानः कदाचित्
सन्तप्तोऽहं विरहदहने ते यदा गाढमासम्।
घोरे नैशे तमसि मनसस् तापयित्रीं तदानी–
मुद्दिश्यैनां स्मृतिमकरुणामत्र चैवं मयोक्तम्।।

(४८)

धृत्वा गूढां छलजवनिकां व्यापृते ध्वान्तराज्ये
चित्तं रिक्तं व्यथयसि कथं निस्सहायं मदीयम्।
तावत्तिष्ठ स्मृत उपनता याति यावन्निशेयं
पश्चाद्यस्यास् त्वमसि सहजा तां दिदृक्षामि त्वाञ्च।।

(४९)

अस्म्यज्ञोऽहं जगति नियतं कर्मसङ्गी प्रसिद्धो
भेदं बुद्धेरिति न जनयेद् वेत्सि गीतोक्तनीतिम्।
सत्यं सैन्या वयमिह यतो कर्मणो मानसाच्च
तस्माच्चिन्त्यं कथमपि शपे नाऽस्ति पत्रं त्वदीयम्।।

(५०)

अर्थेनाऽर्थः क्वचिदपि न मे वेत्सि कश्चित् कदाचित्
पत्रस्याऽतो न हि कथमपि व्यर्थता शङ्कनीया।
सार्थाः शब्दाः सुमुखि ! सकला अङ्किकतास्त्वत्कराभ्यां
ये विस्मार्य त्रिभुवनमिदं त्वां सदा स्मारयन्ति।।

।। इति ।।

***

# शीकराः

(१)

नमामि भारतं वर्षं स्वरूपाऽलङ्कृतं चिरात्।
राहुग्रासविनिर्मुक्तं प्रतपन्तं प्रभाकरम्।।

(२)

नमामि 'इन्दिरां' भद्रां शक्तिविश्वासविग्रहाम्।
भविष्यध्वान्तसौदाम्नीं वर्तमानाऽन्धचन्द्रिकाम्।।

(३)

हसन्तिकास्फुलिङ्गानि व्युच्चरन्ति समन्ततः।
प्रस्फुरन्तीह कस्याऽपि विचारकणिकास्तथा।।

(४)

तिमितिमिलिङ्गलक्रीडाक्षुब्धविक्षुब्धवारिधेः।
उद्भवन्तीह कस्याऽपि विचारा इव शीकराः।।

(५)

गुरुश्चेतिहासश्चिरं चिद्विलासः
सुबद्धाऽतिगुर्वी शुभा संस्कृतिश्च।
समस्तं गुरुत्वं सदा यस्य नित्यं
तदेवाऽस्ति राष्ट्रं तदेवाऽस्ति राष्ट्रम्।।

(६)

यतो हीनता मृत्युताऽऽपादयित्री
बलं सम्बलं जीवनं या च जातेः।
इयं यत्र सत्संस्कृतिर्भारतीया
तदेतद्धि नो भारतं सृष्टिरत्नम्।।

(७)

धनेनाऽपि किं वा स्मरेणाऽपि किं वा
पदेनाऽपि किं वा मदेनाऽपि किं वा ।
अमी जीवनं नैव धर्तुं समर्थाः
कथं जीवनं नो विना संस्कृतिं स्यात् ।।

(८)

भविष्यस्य चिन्तां रतिं वर्तमाने
विहायाऽनुरक्तं गते धिग्भवन्तम् ।
क्षिपन्त्येवमेते क्षिपन्त्वेवमेते
मुदाऽस्पृष्टहृत्कम्पनास्ते प्रलापान् ।।

(९)

अतीतं कथञ्चिन्न भेत्तुं समर्थां
स्वकीयामिमां दृष्टिसीमां विलोक्य ।
अनादिञ्च धर्मं चिरां संस्कृतिञ्च
न कालस्य पाशेन बद्धुं समर्थाः ।।

(१०)

हृदि न्यस्य या रक्षिता पूर्वजैर्नः
पुराणी तथा संस्कृतिर्न्यासभूता ।
तदेतद् धनं पुण्यपैतामहं नो
कथं वा न नो गौरवाय प्रभूतम् ।।

(११)

नवीनमित्येव न साधु सर्वं
यद्यत् पुराणं विकृतं न तत्तत् ।
कथं कुतः केन कदा निरुक्तं
नवीनता चिह्नमदोषतायाः ।।

(१२)

भूखण्डेन हि केवलेन विदिता राष्ट्रस्य किं राष्ट्रता ?
भूखण्डं यदि केवलं ननु ततो राष्ट्रस्य किं राष्ट्रता ?
जातिर्येन विशोधिताऽऽदिसमयाद् गाङ्गं पयो यद्धि तत्–
संस्कृत्या च तया युतं ह्यनुपमं मूल्यं परं भारतम्।।

(१३)

आघातेष्वपि सत्सु भारतमिदं शिष्टं कथं? माऽस्तु
शिष्टश्चेदनलस्य दाहमहिमा शिष्टं न किं तस्य वा
यावत्तिष्ठति संस्कृतिर्दृढतया राष्ट्रं दृढं सम्मतं
शाखाकर्तनविक्रमेण किमहो मूलाश्रिता वृक्षता।।

(१४)

सत्यं शासनरज्जुसर्पफणतो भीतिर्न मे काचिद–
प्याख्यानाद् विरमेत् कथं नु रसना यावन्न सा कर्तिता।
सर्वत्राऽप्यपराधजालपतितो निर्दोष एवाऽस्म्यहं
चेदास्था त्वयि खण्डिता ननु ततो भूमे ! वृणे वध्यताम्।।

(१५)

माता माता भूमिर्भूमिः पुत्रोऽहं पुत्रोऽहं तस्याः।
देहाद् देहाद् वाचो वाचो भावाद् भावाद् भावाच्चाऽपि।।

(१६)

नित्यं भारतभारतीप्रकरणं श्रुत्वा दुरुक्तिं यथा
पापाद् बिभ्यति शष्कुलीः पिदधते कुर्वन्ति किं किं न ते।
एते राष्ट्रियमद्वयत्वमलसा आतन्वते राष्ट्रिया
आश्चर्यं न विदन्ति हन्त वदतो व्याघातदोषं निजम्।।

(१७)

नीत्या मण्डितराज्यमत्र कथितं सन्देग्धि कस्तत्र च
नीत्याः पण्डित ! किं नु धर्मविषये नीतिस्वरूपं मतम् ।
तद् धर्मान्निरपेक्षता यदि तथा नीतेर्नु किं लक्ष्यते
चेत्किञ्चित्तव लक्षितं ननु ततो भिन्ना कथं रासभात् ।।

(१८)

स्वार्थाऽऽप्तिक्षमबुद्धितन्त्रवशगो दुर्वारदुर्वासनो
धर्मं वेत्तु कथं नु नेतृसमजः पूर्णो जडः स्थावरः ।
सूर्याचन्द्रमसोस्तमोऽपहरणं ज्योतिस्सुदूरस्थयोस्
तेषां पार्थिवदृष्टितो व्यवहितं द्यावापृथिव्यन्तरा ।।

(१९)

क्रान्तिस्स्याद् रुधिरप्रसेकसुफला मा वाऽस्तु किं वा ततो
मूल्यं यत्तदवाप्तिसाधकतमं किं तन्न यत् साधनम् ।
इस्लामोऽपि तदीयचिन्तनविधौ सत्यं च मूल्यं परं
तल्लब्धं लघुकालसीम्नि सकलं धन्या हि निष्ठाधना ।।

(२०)

मीमांसे न तदीयधर्मरचनां मूल्याऽङ्कनं नेप्सितं
प्राप्तो वेति मुहम्मदीयपदवीमेकोऽपि किं शोच्यते ।
क्षुद्रस्वार्थखरास्त्रतामचकितं धर्मश्च यैः प्रापितस्
तेषामत्र सुधामुखस्थगरलं निश्शङ्कमुद्घाट्यते ।।

(२१)

पायं पायममी महार्हमदिरामिस्लामनिर्देशतो
जेहादाख्ययुधि प्रवृत्तिमतलां दीक्षन्त उच्चैःस्वरैः ।
धर्मे यद्धि निषिद्धकर्म कथितं कुर्वन्ति तद् धार्मिका
दौर्भाग्यादतिरिक्तमस्ति वद किं वेस्लामधर्मस्य तत् ।।

(२२)

छायाशान्तिसुखप्रदं वटतरुं संसारतापापहं
आरूढस्त्ववरुद्धतत्प्रसरणो माद्यन्न किं लज्जसे।
ऐश्वर्यं सकलश्च तस्य विभवःसर्वं त्वया स्वीकृतं
धिग्धिक् त्वां परकीयरक्तरसनात् खर्जूर! पीनं परम् ।।

(२३)

मुग़लाऽन्वयसम्भूतो बाबरो दृढनिश्चयः।
विक्षिप्तनृपसामर्थ्ये प्रविष्टो हन्त भारते।।

(२४)

हिन्दूमुस्लिममिश्रणाऽतुलमहस्सम्पन्नसेनाऽग्रणी–
रिब्राहीमनृपो हि येन विजितस्त्विस्लाम किं वा स्वतः।
सोऽयं भूपतिबाबरो जयति तं साँगां हि जेहादतस्
सेनानीर्नृपधर्मयोर्वदतु कः कस्याऽत्र निष्पक्षतः।।

(२५)

नमामि काफ़िरान् सर्वान् मृत्युकौतुककामुकान्।
साह्यसम्भावनासिद्धिर् दर्शिता यैस्तपस्विभिः।।

(२६)

आबिदीनस्तथा दारा सम्राडकबरो वरः।
औदार्याऽऽकाशसङ्काशान् नौमि काफ़िरानिमान्।।

(२७)

शस्त्राशस्त्रिपरायणा अतिदृढं शास्त्राक्षराऽऽलम्बिनो
राजानो मुगलाऽन्वये समभवन् धर्मप्रिया अप्रियाः।।
अत्यन्तं समुदारबुद्धिविभवस्तत्राऽपि यः कोऽपि वा
धर्मध्वान्तनिशासु चिन्तनदिशा विद्युत्समो भासते।।

(२८)

औदार्याऽन्वितधारयैव किमपि प्रायेण सम्भाव्यते
याऽनौदार्यपराशयेति महिता वन्द्यैव सा दूरतः।
यत्सत्ताघटघट्टने हि करणं युद्धं मतं मृन्मयं
शान्तिश्चेत् समपेक्ष्यते ननु ततः शुष्के सतृणायितम्।।

(२९)

गूढाऽऽकारेङ्गितस्याऽय अकबरस्य महात्मनः।
विषये महती भ्रान्तिः सन्देहश्च विपश्चिताम्।।

(३०)

इस्लामप्रणयान्न भारतमिदं सत्यं क्षमं शासितुं
हिन्दुद्वेषबलान्न भारतमिदं सत्यं क्षमं शासितुम्।
भूमिश्चेद्धि तिरस्कृता कथमिदं पुष्पं क्षमं पुष्पितुं
नीतिं धर्मसमानतामकबरस्त्वित्थं व्यवास्थापयत्।।

(३१)

धर्मौदार्यदिवाकरोऽप्यनुदितो 'दाराशिकोहाऽभिधो'
योऽसौ धर्मघनोपलप्रहरणैरस्ताऽचलं प्रापितः।
आश्चर्यं ननु पश्य पश्य किमिदं दूरे दरीदृश्यते
सोऽयं सोऽयमहो सहस्रकिरणो यः सामरस्यध्वजः।।

(३२)

नानात्वं नितरां हि सिध्यति यदा नित्यं दिशस्येकतां
हिन्दूमुस्लिमभिन्नतां हृदि यदा नित्यं दिशस्येकताम्।
ऐक्यं किन्तु निरूप्यतां स्फुटतया तत्राऽक्षमश्चेत्तदा
मूर्तस् स्वीक्रियतामयं नृपसुतस्त्वैक्यप्रतीको वरः।।

(३३)

अत्यन्तं हि विरुद्धजातियुगलं पाणिग्रहप्रीतिभिर्
योऽसौ हन्त बबन्ध संस्कृतमिदं प्रौच्चैः पदं नीतवान्।
तद्ग्रन्थान् बहुलांश्च सार्थकगतिं भाषान्तरेणानयत्
सोऽयं 'ज़ैनुल आबिदीन' नृपतिर् वन्द्यः कथं कस्य नो।।

(३४)

आसीदत्र 'कबीर' नाम कविराड् धर्मद्विषो धार्मिको
हिन्दूमुस्लिमजातिमध्यपतितस् तत्राऽपि यो नोभयम्।
ऐक्यं रामरहीमयोरुपदिशन् धर्माऽद्वयं प्रोक्तवान्
सोऽयं संस्मरणीयतामनुगतिं कस्मान्न चाऽर्हत्यहो।।

(३५)

यद्यपि बहवः सन्ति तादृशा इष्टनायकाः।
ते यत्र क्वचिदुक्तेन चकारेण विवक्षिताः।।

(३६)

'अब्दाली' 'नृपनादिरो' 'गज़नवी' शिष्या अनल्पास्तथा
नीयन्ते स्मृतिवीथिकासु सुचिरं धर्माऽन्धताऽऽलिङ्गिताः।
सन्ध्यायामवलोक्यते तदुदिता ह्यद्याऽपि रक्तच्छटा
नैशीथेऽपि च सूचिभेद्यतमसि प्रध्वंससंस्तब्धता।।

(३७)

पूर्वं येन नृमेधयज्ञसुकृतं सत्यं सुसम्पादितं
रक्ताऽऽस्वादनशान्तकण्ठरसना कण्डूकृतार्थश्च यः।
धत्ते चित्रमसौ हि बन्धनगृहे रूपं 'नृयाजिव्रजो'
यद्योग्या वरसुन्दरी स च दरीरक्षो दरीदृश्यते।।

(३८)

यंद्यपि बहवः सन्ति तादृशाः खलनायकाः ।
ते यत्र क्वचिदुक्तेन चकारेण विवक्षिताः ।।

(३९)

किं नूत्नं समुपागतोऽसि सुतरामिस्लाम ते स्वागतं
किं नूत्नं यदि तेऽस्ति विस्तररतिर्धर्मस्य सा धर्मता ।
नूनं नूत्नमिवाचरस्यनुदिनं भूमिं च नो मातरं
केशाऽऽकर्षणभोग्यतैकवशतां दासीमिवाऽऽपाद्य ताम् ।।

(४०)

आस्था मूल्ये प्रतननिजता प्राक्तनश्चेतिहासः
संस्कृत्यादौ हृदि हृदि गता गौरवस्याऽनुभूतिः ।
एवद्ध्वंसप्रतिनिधिनिभे नक्सलीये युगेऽस्मिन्
नौकां स्रष्टा प्रलयसमये मृग्यतां कोऽपि नेता ।।

(४१)

समतामिताञ्च निरूपयितस्
तव सङ्ग्रहवृत्तिविदूषकता ।
प्रतिभासयति प्रतिभां प्रचुरा–
मयि नेतृवर ! प्रणमानि कथम् ।।

(४२)

करतस्करता प्रतिभा प्रथिता
न च विस्मरणप्रियता प्रमिता ।
महती हि कृतिः प्रकृतिर्महता–
मयि नेतृवर! प्रणमानि कथम् ।।

(४३)

भवदीयमहो भवदीपशिखं
गुणगुच्छगणं गणयानि कथम्।
तव कीर्तिकथां कथयानि कथं
अयि नेतृवर! प्रणमानि कथम्।।

(४४)

न चाटुवाचा किल मत्प्रयोजनं
प्रसादिता सा ननु किं प्रदास्यति।
नमामि तां भूरि यदीयकैतवात्
समाजवादस्त्ववभासते सखे।।

(४५)

नित्यः शब्दार्थसम्बन्धो यद्यप्युक्तो मनीषिभिः।
समाजवादवच्छब्दा विभान्त्यर्थविवर्जिताः।।

(४६)

सङ्गीतं च कला च मञ्जुकविता सौन्दर्यलक्ष्मीश्च या
ऊढास्तास्तु समाजवादनयतो भार्याश्चतस्रो मम।
सर्वासामहमस्म्यनन्यसुपतिः सर्वाः प्रियाः प्राणतस्
त्वाऽऽलिङ्गन्ति चुचुम्बिषन्ति बलतो हा हन्त ता लम्पटाः।।

(४७)

नित्यं काञ्चनकर्दमाऽऽकरचराः पाटच्चराः कच्चराः
दन्तादन्तिविवादतुन्दिलतराः कुक्षिम्भराः कुक्कुराः।
सौन्दर्यं ननु मामकं कुलधनं ह्येते कुतो वञ्चका
हा हा हा प्रकृतिं प्रियां प्रियतमां कर्षन्ति धर्षन्ति च।।

(४८)

एते वित्तविभुप्रभुत्वनिचया निष्कण्टाः कण्टका
एते सर्वकलाधुरन्धरधियो सत्यं धरित्रीधराः।
सङ्गीतं ननु गीयते सहृदयाऽऽस्वाद्यं परं तद् रसं
जिह्वालौल्यवशाः सतीमिव विटा भुञ्जन्ति पाषण्डिनः।।

(४६)

समाऽवसरसौविध्यं सर्वेषां योग्यताऽऽश्रितम्।
समासेन प्रवक्तव्यं समाजवादलक्षणम्।।

(५०)

भारती स्रग्विणी भारती स्रग्विणी
स्रग्विणी भारती स्रग्विणी भारती।
भारतं मौक्तिकं भारतं मौक्तिकं
मौक्तिकं भारतं मौक्तिकं भारतम्।।

***

## विश्वविद्यालय—गीतम्

अथ विश्वविद्यामन्दिरं लक्ष्मणपुरीयं राजताम्।
राराज्यतां दिशि दिशि चिरम् इदमेधतामभिवर्द्धताम्।।

विद्यातपश्चर्याधनं विद्याधिदैवतकुलधनम्।
विद्याप्रसादनसाधनम् इदमेधतामभिवर्द्धताम्।।

विज्ञानवरिवस्याफलं जिज्ञासुकल्पद्रुमदलम्।
प्रतिभाजुषां तीर्थस्थलम् इदमेधतामभिवर्द्धताम्।।

प्रज्ञानिनां प्रज्ञार्थिनां प्राध्यापकाऽन्तेवासिनाम्।
वरकुलपतेश्चाश्रमपदम् इदमेधतामभिवर्द्धताम्।।

फलमभ्युदयनिःश्रेयसं वितरद् वदान्यतयेप्सितम्।
योगं तथा क्षेमं दिशद् इद्मेधतामभिवर्द्धताम्।।

भारतधरातिलकाञ्चनम् अवधाख्यमण्डलमण्डनम्।
लक्ष्मणपुरीहृद्हारकम् इदमेधतामभिवर्द्धताम्।।

***

# मदीयं भारतं वर्षम्

धरित्रीस्वर्गकुलसञ्ज्ञं
मदीयं भारतं वर्षम् ।

श्रुतिस्मृत्यादिभिः शास्त्रैः
पुराणैः सेतिहासाद्यैः
तथा स्वर्गस्थितैर्नैकैः
सुरैरीशावतारैश्च
महाचार्यैः सुविख्यातैः
सुधीभिर्यन् महाकविभिः
प्रगीतं मुक्तकण्ठं तन्
मदीयं भारतं वर्षम् ।। धरित्रीस्वर्ग....

किरीटं पादपीठञ्च
हिमाद्रिश्च महाब्धिश्च
स्रवन्त्यः कण्ठमणिहाराः
भुवो राज्याभिषेकार्हाः
निसर्गोद्भावितैश्वर्यं
किमप्येकान्तमाश्चर्यं
प्रकृत्या ख्यापितोत्कर्षं
मदीयं भारतं वर्षम् ।। धरित्रीस्वर्ग....

सुखेनाऽव्यर्थमुन्मत्तं
तथा दुःखेन सन्तप्तं
सदा प्रतिबोधयन्तीभिः
चिरायाश्वासयन्तीभिः
वसन्तग्रीष्मवर्षाभिः
शरद्हिमशिशिररूपाभिः
समाश्रितमेकमृतुततिभिः
मदीयं भारतं वर्षम्।। धरित्रीस्वर्ग....

असूर्यम्पश्यमिव सुप्तं
प्रगाढे तमसि सङ्गुप्तं
यदासीन् नोऽसदथ नो सत्
समस्तं विश्वमेतत् तत्
तदा भ्राजत्प्रकाशात्मं
घनीभूतप्रबोधाढ्यं
समुदितं मित्रवन्मित्रं
मदीयं भारतं वर्षम्।। धरित्रीस्वर्ग....

अहो सामाजिकं न्यायं
मनुष्यस्याधिकारञ्च
समुत्पाट्यादिमावासान्
प्रगाढं स्वैरमध्यस्तैः
दिशद्भिर् विस्मृतं ससुखं
समग्रप्राणिनां क्षेमं
तदेतद् गीतयाऽगायन्
मदीयं भारतं वर्षम्।।

धरित्रीस्वर्गकुलसञ्ज्ञम्
मदीयं भारतं वर्षम्।।



# सैका श्रितिः

कापि दिव्याऽतिनव्याऽनवद्याऽऽकृतिः।
गान्धिवर्य! प्रिया तावकीयं सृतिः।।

स्वार्थलिप्सामदभ्रष्टतायौवना—
रूढकूलङ्कषाया महासम्प्लवे।

मज्जमानस्य लोकस्य सैका श्रितिः
नौरिवाश्वासिनी तावकी संस्मृतिः।।
काऽपि दिव्या...................................

सत्यसूर्ये महाज्ञानमेघावृते
शुभ्रचारित्र्यदारिद्र्यदुःस्थे युगे।
सूचिभेद्यान्धकारेऽस्ति शस्ता गतिर्
मूर्ततेजस्वितायाः सैका द्युतिः।।
काऽपि दिव्या...................................

सत्यमार्गो नु किम् ? धर्ममार्गो नु किम् ?
योगमार्गो नु किम् ? क्षेममार्गो नु किम् ?
दिग्विमूढाय लोकाय विद्युल्लता
गान्धिसूक्तिर्नवा साऽस्ति दिव्या श्रुतिः।।
काऽपि दिव्या...................................

"आदिकाव्यं यथा भाति रामायणं
मेघदूतं नु वा गीतगोविन्दकम्।
अश्रुतोऽचिन्तितोऽतर्कितोऽकल्पितस्
त्वेष सत्याग्रहः काव्यरूपा कृतिः।।
काऽपि दिव्या...................................

ब्रह्मतेजो बलं क्षत्रतेजो बलं
प्राक्तनोऽयं विवादस्तु नैकं बलम्।
आत्मनो यद्बलं तद्बलं सद्बलं
गान्धिवृत्तं समाघ्राय सैका मितिः।।
काऽपि दिव्या...................................

***

## स्वागतं ते वसन्त!

विश्लेषं ते मरणसदृशं तं कथञ्चिद् वहन्त्या
क्लान्ताऽवन्या तुहिनरचितं कञ्चुकं यत्पिनद्धम्।
औशीरं वा ऋतुकुलपते! भूधरोरोजयोस्तद्
गात्रस्पर्शः शिथिलयति ते कैतवेनार्करश्मेः ।।

वारं वारं मदनरचिते तप्तनिश्श्वाससूत्रे
ओतप्रोतैः स्मरणकुसुमैर्जीवनाधारभूतैः।
माल्यं हार्दं ग्रथितमनया, निष्ठुरं धूननेन
धूलिं किं वा विसृजति शनैश्चर्चितं स्वाङ्गरागम्।।

कामं कामं प्रकृतिमृदुलो हन्त योऽसौ वसन्तो
गाढं शीतं स्खलितविभवं सत्तयैवाकरोद् यः।
सम्प्रत्येष प्रतिभटभटोऽप्याणवीयास्त्रसज्जो
गर्जं गर्जं बहुविधमहो तं न जेतुं समर्थः।।

धूमाङ्गारैः कलियुगकृतैर्यान्त्रिकैर्निश्श्वसन्तीं
दृष्ट्वा शेषे किमतिविकलां रङ्गभूमिं स्वकीयाम्।
कुण्ठीभूतप्रहरणबल! स्निग्ध कुसुमायुधस्य
सोत्साहं ते कथमिव सखे स्वागतं व्याहरामि।।

व्याप्ताऽऽकाशे दिशि दिशि च सा हन्त कालुष्यकान्तिः
प्राप्तं पश्य महितसरितां सज्जलं कज्जलत्वम्।
तस्माद् यावत्तव यतनतो दूषणं भूषणं स्यात्
सोत्साहं ते कथमिव सखे स्वागतं व्याहरामि।।

जाड्याकाशे ह्यवगतिदिशस्सन्ति मालिन्यवेशाश्
चान्द्री शोभा कथयति नु किं सूर्यरश्मिश्च किं वा।
नाऽहं जाने, तव च वसतिम्, कोकिलालापदौत्य!
प्राप्तोऽसि त्वं कथमपि ततस्स्वागतं ते वसन्त!।।

***

## समायाति मन्दं वसन्तो दिगन्तः

समायाति मन्दं वसन्तो दिगन्तः
विशति मन्दमन्दं वसन्तो हृदन्तः ।।

मदनतन्त्रमन्त्रोऽभियानेष्वतन्द्रः
वशीकारधिक्कारतन्त्रस्वतन्त्रः
प्रणयवृक्षसेकक्रियायामतन्द्रः
स कान्तः प्रणयिनां विरहिणां दुरन्तः
समायाति मन्दं वसन्तो दिगन्तः
विशति मन्दमन्दं वसन्तो हृदन्तः ।।

सरति सुखकरोऽसौ समीरोऽनुतीरं
स्पृशति मृदुलमृदुलं शरीरं शरीरं
प्रगाढं च मथ्नात्यधीरं च धीरम्
सुभीमोऽपि कान्तः समेषां वसन्तः
समायाति मन्दं वसन्तो दिगन्तः
विशति मन्दमन्दं वसन्तो हृदन्तः ।।

प्रवेपथुमतीं पश्य पृथिवीवधूटीं
सुपीतांशुकामथ हरितवर्णशाटीम्
मनोहर्षसूचकविकचपुष्पवाटीं
भवेयुर्न मुग्धाः सहृदयाः कियन्तः
समायाति मन्दं वसन्तो दिगन्तः
विशति मन्दमन्दं वसन्तो हृदन्तः ।।

सुभव्याम्बरस्त्वम्बरश्रीनिधानः
सुतनुदीप्तिमानः सुतिमिरावसानः
अमन्दं चकास्त्यद्य विभ्राजमानः
स चन्द्रः कुपितकामिनीमानहन्ता
समायाति मन्दं वसन्तो दिगन्तः
विशति मन्दमन्दं वसन्तो हृदन्तः ।।

सुपुंसां सुपुंसां यशांसि यशांसि
सुयशसां सुयशसां मनांसि मनांसि
सुमनसां सुमनसां तमांसि तमांसि
प्रवर्द्धय पवित्रय विदारय वसन्त!
समायाति मन्दं वसन्तो दिगन्तः
विशति मन्दमन्दं वसन्तो हृदन्तः ।।

***

## हे वर्षासुकुमारि!

चञ्चच्चञ्चलचञ्चलाञ्चले!
हे वर्षासुकुमारि!

त्वमस्यमृतदीधितिसहोदरी
लावण्याब्धिसुता रसेश्वरी
महनीया महिता महेश्वरी
सान्द्रमसृणघनश्यामकुन्तले!
हे वर्षासुकुमारि!

मन्द्रमदिरकाकलिनिस्वनने!
मन्दसुरभिमारुतनिःश्वसने!
श्यामे! ब्रूहि त्वमसि किं मुग्धा
यौवनदेहलिधृतपदकमले!
हे वर्षासुकुमारि!

त्यज नन्दनवनिकाभिनिवेशम्
एहि, सनाथय नयननिवेशम्
इतो दृशं विशदं त्वं क्षेप्स्यसि
मनसि त्वद्विरहदहनसङ्कुले!
हे वर्षासुकुमारि!

प्रासादेषु यथा त्वं मुह्यसि
तथा कुटीष्वपि प्रसभं स्निह्यसि
वर्ष झमाझम हे समदर्शिनि!
मेरौ यथा, तथा मरुस्थले!
हे वर्षासुकुमारि!

दिक्षु विदिक्षु प्रदीप्तो वह्निः
अन्तर्बहिः समन्ताद् वह्निः
शीतमपाङ्गनिपातं प्रेरय
त्रिविधतापशमनाय वत्सले!
हे वर्षासुकुमारि!

***

# शारदी रजनी

दिशि दिशि रूपकरीं विकिरन्ती
हृदयं हरति शारदी रजनी।

खचिततारकं हृदयहारकम्
शुभ्रचन्द्रिकाक्षौमशाटकम्
धृत्वाऽशब्दं पदं न्यसन्ती
निखिलचेतनाया आहरणी।
हृदयं हरति राजती रजनी।

मधुमृद्वीका चतुरचन्द्रिका
कुपितकामिनीकोपकर्षिका
भग्नहृदामाशागवाक्षिका
चित्रेयं चलचित्तरञ्जनी।
हृदयं हरति राजती रजनी।

अवगुण्ठनमपनय मा मा सखि
रूपं निर्वसनं कुरु मा सखि
पटसङ्क्रमिता छविः प्रायशः
कथयति शिष्टकथामभिभवनी।
हृदयं हरति राजती रजनी।

चञ्चच्चन्द्रमुखी मदयन्ती
समायाति सस्मितं नयन्ती
स्वर्णिमकरतः स्वर्णिमकलशम्
यौवनमधुमदिराविक्रयिणी
हृदयं हरति राजती रजनी।

तेऽभिनन्द्य सुमुखि मुखशुचिताम्
नित्यामिव प्रसन्नतान्विताम्
सकलेयं जनमनः सन्ततिः
प्रसन्नता–याचना–प्रणयिणी
हृदयं हरति राजती रजनी।

***

## रसघन!

रसघन! रसघनचयान् अभिवर्षय वर्षय
सहृदयहृदयस्थलीरभिपर्णय पर्णय

अन्तरङ्गनाथ! भुवन–
रङ्गनाथ! रङ्गनाथ।।
करुणतातरङ्गनाथ!
करुणतां तरङ्गय, तरङ्गय।।

रसघन। रसघनचयान् अभिवर्षय वर्षय
सहृदयहृदयस्थलीरभिपर्णय पर्णय

कवितावनिताकलासु
हृदयहरणपटुतरासु।
बहुविधासु तासु तासु
कमपि रसं मिश्रय, मिश्रय।।
रसघन! रसघनचयान् अभिवर्षय वर्षय
सहृदयहृदयस्थलीरभिपर्णय पर्णय

तुहिनक्षततामरसम्
पूतिकपर्युषितरसम्।
नवरसघनसिञ्चनेन
जीवनमभिपूरय, पूरय।।

रसघन! रसघनचयान् अभिवर्षय वर्षय
सहृदयहृदयस्थलीरभिपर्णय, पर्णय।।

***

## अनन्तं पदम्

कोऽपि सुविज्ञो दिशतु दिशं मे।
नूतननिर्मलविशददिशं मे।।

संसृतिरचनारूपं चित्रम्,
मानवतायाथात्म्यं चित्रम्,
जननं चित्रं मरणं चित्रम्,
चित्रत्वं प्रदिशतु विशदं मे ।।
कोऽपि सुविज्ञो...................

सृष्टिरहस्यरज्जुतो बद्धम्,
प्रबलसहजसंस्कारनिबद्धम्,
निर्लक्ष्यताशापद्भिर्बद्धम्,
जीवनमिदम्, दिशतु लक्ष्यं मे।।
कोऽपि सुविज्ञो...................

वृद्धास्त्वेते रूढिसुबद्धाः,
प्रियप्राचीना नूत्नविरुद्धाः,
किं वा ते निर्देष्टुं शक्ताः,
नवं वर्त्म प्रस्फुटतु स्वयं मे।।
कोऽपि सुविज्ञो...................

केचन प्रश्ना अतिप्राचीनाः,
सार्वकालिकाः सार्वजनीनाः,
अरुन्तुदास्ते नित्यनवीनाः,
एकं दिशतु कोऽपि किरणं मे ।।
कोऽपि सुविज्ञो...................

इच्छत्यमरत्वं सर्वः खलु,
इच्छा सकर्मिकाऽस्ति यतः खलु,
इष्टमतः सत् क्वचिद् विलीनम्,
तदिदमनन्तं दिशतु पदं मे।।
कोऽपि सुविज्ञो दिशतु दिशं मे
नूतननिर्मलविशददिशं मे।।

कोऽपि सुविज्ञो दिशतु दिशं मे।
नूतननिर्मल विशददिशं मे।।

***

## अवगुण्ठनम्

अवगुण्ठनमपनयति सुवदना,
उषा मुग्धकलवचना।

युवतेर् लज्जा रुचिरा सज्जा
प्रियतमवरजिज्ञासा हृज्जा
अवगुण्ठनमुत रूपरहस्यं
स्वर्णझरी किमु सघना।।

अवगुण्ठनमपनयति सुवदना,
उषा मुग्धकलवचना।

अविदितयौवनमदा प्रमुग्धा
अकलुषरूपविलासविदग्धा
विग्रहिणीव चारुता स्निग्धा
अपत्रपाऽरुणवदना।।

अवगुण्ठनमपनयति सुवदना,
उषा मुग्धकलवचना।

लोकय शतदलवरं सुपर्णं
त्वच्छविधनं सुवर्णसवर्णम्
मदयद्रूपं भृशमनुरक्ता
मुग्धशिलीमुखललना।।

अवगुण्ठनमपनयति सुवदना,
उषा मुग्धकलवचना।

प्रत्युद्गच्छ प्रियं प्रियतरं
द्वारि संस्थितं रतं दिनकरं
प्रणययाचनाप्रसृतकरतलम्
न करु विलम्बनमधुना।।

अवगुण्ठनमपनयति सुवदना,
उषा मुग्धकलवचना।

त्यज परिवेशं त्यज परमेशं
भज हृदयेशं भज हृदये शम्
चिरप्रणययाचकं कृतार्थं
कुरु सम्प्रति रतिनिधिना।।

अवगुण्ठनमपनयति सुवदना,
उषा मुग्धकलवचना।

***

# अवनी प्रमदवनी

पल्लविनी फलिनी विलासिनी
अवनी प्रमदवनी।

धृत्वा प्रतनुतुषारावरणम्
आविष्कृत्य रूपप्रस्रवणं
रामं रामं रमते प्रकृतिः
मदयद्यौवनकलशाभरणी
अवनी प्रमदवनी।

क्षीरोदधिस्नात इव हंसः
अन्तर्हितपङ्कजावतंसः
दीव्यद् दीव्यद् दीव्यति दिवसः
मुह्यन्तीयं मुह्यति रजनी
अवनी प्रमदवनी।

विकसत्सुमनोमनोवाटिका
सुष्ठु समुद्घाटितकपाटिका
दिशि दिशि वितरत्यवगतिसुरभिं
सुधादानदक्षेव मोहिनी
अवनी प्रमदवनी।

समीरणस्तत्तत्स्वरसदृशं
वंशीतानं तनुते सरसं
रतिरागं गायति मृदु गगनं
छलिकं नृत्यं नृत्यत्यवनी
अवनी प्रमदवनी।

दुःखं सत्यं तत्त्वमन्तिमम्
सुखं दुःखविस्मरणलक्षणम्
मुरलीं मुखरय यथा जागृयाद्
विस्मृतिरियमवसादविजयिनी
अवनी प्रमदवनी।

***

## प्रस्थितोऽसि विदेशम्

प्रिय! दैन्यं दशा मम याति रे
प्रस्थितोऽसि विदेशम्।।
श्वश्रूश्वशुरौ किमपि वदेताम्
भृकुटिं कुटिलां मयि क्षिप्येताम्
मम भृकुटिश्चला त्रुटिं याति रे
प्रस्थितोऽसि विदेशम्।।
प्रिय! दैन्यं दशा.............

कृशमध्या प्रिय! प्रिया तवाऽहं
विरहशैलकूटाऽऽक्रान्ताऽहम्
मम तन्वी कटिः त्रुटिं याति रे
प्रस्थितोऽसि विदेशम्।।
प्रिय! दैन्यं दशा.............

यासि चेन् मामपि नय दूरं
गौरीभ्यो वा तिष्ठ विदूरम्
मम ह्वदयं द्रुतं त्रुटिं याति रे
प्रस्थितोऽसि विदेशम्।।
प्रिय! दैन्यं दशा.............

कान्तस्त्वं कन्तेयं रमणी
पुत्रस्त्वं पृथिवीयं जननी
विश्वासो दृढः त्रुटिं याति रे
प्रस्थितोऽसि विदेशम्।।
प्रिय! दैन्यं दशा.............

यासि चेत् त्वं याहि सकामं
राष्ट्रायाऽर्जय निरुपममानं
तव पन्था शिवम् उपयाति रे
प्रस्थितोऽसि विदेशं
प्रिय! दैन्य दशा............

***

# काकोऽहमस्मि

कः कोऽहमस्मि ? कः कोऽहमस्मि ?
काकोऽहमस्मि, काकोऽहमस्मि ।

शृणु चेत्पृच्छसि जिज्ञासायाः
कः कोऽहमस्मि ? कः कोऽहमस्मि ?
सत्यं ब्रवीमि यो योऽहमस्मि
काकोऽहमस्मि, काकोऽहमस्मि ।

काकत्वे हास्यं किमिति मित्र!
हंसत्वे श्लाघ्यं किमिति मित्र!
कत्वे हत्वे किं वरं मित्र!
किमिदं किमिदं त्वं हससि मित्र!
हसनीयशेमुषीसरणिजुषां
पुंसां स्वान्तःशोधकोऽहमस्मि ।
कः कोऽहमस्मि? कः कोऽहमस्मि?
काकोऽहमस्मि, काकोऽहमस्मि ।

रङ्गैरखिलैरभिभवनीयं
रूपं धवलं त्वं वहसि हंस!
त्रिष्वपि कालेष्वधृष्यरूपं
कृष्णं काकं त्वं हससि कंस !
निजदलपरिवर्तनशीलानाम्
निजतानिष्ठाशासकोऽहमस्मि ?

कः कोऽहमस्मि ? कः कोऽहमस्मि ?
काकोऽहमस्मि, काकोऽहमस्मि ।

अफ्रीका मे मूलो देशः
कृष्णो मे सकलः परिवेशः
विश्वस्मिन् विश्वे पर्यटामि
स्वैरं निन्दास्तुतिवित्तेशः ।
जनमानसगतरतिविरतीनां
प्रस्फुटं परीपाकोऽहमस्मि ।
कः कोऽहमस्मि ? कः कोऽहमस्मि ?
काकोऽहमस्मि, काकोऽहमस्मि ।

कृष्णताऽभिमानध्वजलिङ्गः
मानवतामूल्यमेरुश्रृङ्गः
हिंसितो धवलचरितैर् हंसैर्
बन्धुर्मार्टिनलूथरकिङ्गः
मानवतानाममात्रजापक !
मानवतारूपनामकोऽहमस्मि ।
कः कोऽहमस्मि ? कः कोऽहमस्मि ?
काकोऽहमस्मि, काकोऽहमस्मि ।

***

## निद्रा गता मम नयनयोः

विमुखे त्वया नयने कृते
निद्रा गता मम नयनयोः।
वदने च जाता पाण्डुता
ननु सार्द्रता मम नयनयोः।।

किं किं न वक्तुमभीप्सितम्
किं किं न हन्त मनीषितम्।
यदनुक्तमपि नु विवक्षितं
दीपकशिखा मम नयनयोः।।

सन्तमसमसि मम नयनयोर्
असि वद नु लोचनचन्द्रिका।
दृग्धारभारविजृम्भितम्
उत दुर्दिनं मम नयनयोः।।

मम वेदना त्वं वा पुनर्
आयाति कोऽत्र शनैः शनैः।
छादयति हृदयं निक्षिपन्
तिमिरं घनं मम नयनयोः।।

अयि वेदने! त्वं प्रेयसी
प्रेयसि! शुभा त्वं वेदना।
मानं च तत्र विलोक्यतां
तदनन्यतां मम नयनयोः।।

***

## किं करवाणि क्व यानि

किं करवाणि क्व यानि ?
प्रियतम! किं करवाणि क्व यानि ?

सकलो दिवसः कथमपि नीतः
कालतिरस्करिणीं हा धृत्वा
संस्मरणे प्रविशति सति हृदये
निशि कथमिव निद्राणि?
किं करवाणि क्व यानि?

स्मृतिशीतो वायुर्मन्दं
प्रवहतिं किं वा प्रदहति मन्दं
तपति च हृदयं मन्दं मन्दं
कथं हन्त शमयानि?
किं करवाणि क्व यानि ?

लोचनधारा जलधरधारा
अथवा सेयं कविताधारा
तृषिते हृदये केयं धारा
हा कथमिव सिञ्चानि ?
किं करवाणि क्व यानि ?

कुत्र निमग्नो विस्मृतिचित्तः
संस्मरामि किं संस्मृतिवित्तः
स्मृतिदग्धो विस्मृतिसिक्तः
ग्रथये कानि सुमानि ?
किं करवाणि क्व यानि ?

रम्ये दृश्ये द्युतिं त्वदीयाम्
रम्ये श्रव्ये श्रुतिं त्वदीयाम्
रम्ये रम्ये छविं त्वदीयाम्
प्रेक्षे, किं करवाणि ?
किं करवाणि क्व यानि ?
प्रियतम! किं करवाणि क्व यानि?

***

# अनुशासनमेव वरं वृणु त्वम्

अथ योगक्षेमकरं मन्त्रम्
अनुशासनमेव वरं वृणु त्वम्।

उत्कृष्टपदप्रेप्साक्रान्तम्
दिग्भ्रान्तं श्रान्तं वीक्ष्य माम्
करुणेनान्तःकरणेन तदा
तमसो ज्योतिर्नयता प्रोक्तम्
अथ योगक्षेमकरं मन्त्रम्
अनुशासनमेव वरं वृणु त्वम्।

अभिलषितशतं हृदये निहितम्
लभ्यं तच्छकलं न तु सकलम्
कथमिच्छाभारभराक्रान्तः
खिद्यसे विहाय वरेण्यं त्वम्
अथ योगक्षेमकरं मन्त्रम्
अनुशासनमेव वरं वृणु त्वम्।

अभिनेता नेता प्रतिनेता
कुलपतिश्शिक्षकस्त्वध्येता
सर्वस्त्वुपदिशन् विहितकृत्यः
अनुशासनस्य तदिदन्त्वमिदम्
अथ योगक्षेमकरं मन्त्रम्
अनुशासनमेव वरं वृणु त्वम्।

तुष्टिं तृप्तिं शान्तिं क्षान्तिम्
मुक्तिं भुक्तिं सिद्धिं वृद्धिम्
ऋद्धिञ्च जीवने चेदिच्छसि
न कदापि विफलतां चेदिच्छसि
अथ योगक्षेमकरं मन्त्रम्
अनुशासनमेव वरं वृणु त्वम् ।

संयमसञ्ज्ञं संसिद्धिकरम्
अनुशासनमेव सुयोगकरम्
अनुशासनमेव क्षेमकरम्
अथ योगक्षेमकरं मन्त्रम्
अनुशासनमेव वरं वृणु त्वम् ।

***

## बौण्डीग्रामः

स्वप्नः कश्चन मनोऽभिरामः
अहो मदीयो बौण्डीग्रामः ।।

भारतवर्षस्योत्तरदेशे
बहराइचजनपदे सुवेशे
घर्घररवा घाघरा प्रवहति
क्वचित्पीडयति क्वचित्प्रीणयति
नदीमातृकः क्षेत्रललामः
अहो मदीयो बौण्डीग्रामः ।।

रामस्नानपुण्यजलधरा
सरयूस्तत्र च साऽत्र घाघरा
प्रवहति घर्घरनादाऽजस्रं
शिशिरः पवनो मनः पवित्रं
विहरति सिते सैकते श्यामः
अहो मदीयो बौण्डीग्रामः ।।

शस्यश्यामा धरा सलज्जा
पिहिताऽनया मनोज्ञा सज्जा
आम्रमञ्जरीमधुसौरभ्यम्
मलयानिलवलितैरुपलभ्यम्
वसति वसन्तस्त्वत्र सकामः
अहो मदीयो बौडीग्रामः ।।

स्वातन्त्र्याग्नौ निजमुत्सर्गं
बौण्डीनृपश्चकार सहर्षम्
मातृभूमिभक्तस्य कस्य नो
गौरवबुद्ध्या मनः सगर्वं
कोष्णः क्रान्तिक्रीडारामः
अहो मदीयो बौण्डीग्रामः।।

अस्मद्वंशस्यात्र संस्कृतिः
अत्रैवाऽस्य च रूपसंस्मृतिः
यस्मिन् परमपूरुषे विलसति
योगीशं तं जनः संस्मरति
महाराज इति गेन्दारामः
अहो मदीयो बौण्डीग्रामः।।

पितामहैर्मे विबुधस्मर्यैः
पण्डितगौरीशङ्करवर्यैः
सदाचारसद्गुणावदातैः
गिरिधारीलालार्यैस्तातैः
शिष्टे पथि लब्धो विश्रामः
अहो मदीयो बौण्डीग्रामः।।

भारतराष्ट्राध्यक्षमानितः
दिशि दिशि यशोविभूतिभूषितः
बौण्डीध्वजमिव वहति तपस्वी
श्रीमद्बच्चूलालोऽवस्थी
अङ्गीकृतसज्जनप्रणामः
अहो मदीयो बौण्डीग्रामः।।

श्रुतिधारानिष्णाता बौण्डी
सकला सफला सबला बौण्डी
सेयमिदानीं विकला जाता
दयनीयतां दीनतां याता
यथा पुनः स्वं रूपमाप्नुयात्
तथा प्रसीदत्वात्मारामः
आत्मारामो गेन्दारामः
जयतु मदीयो बौण्डीग्रामः।।

***

